चित्तज्ञातृत्वरूपं चित्तभोक्तृत्वं पुरुषस्य स्यात् । चित्तस्थले हि घटादिविषयग्रहणं चित्तस्य सचारात्तदाकारपरिणामाच्च दृष्टमित्यर्थः । तत्र सिद्धान्तसूत्रम् ।

## चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥२२॥

अप्रतिसंचारायाः अपि चितेः स्वीयबुद्धिवृत्तिदर्शनं बुद्धिवृत्त्याकारतापत्त्यैव भवतीत्यर्थः । अयं भावः । ज्ञातुः संचारो न साक्षादेव ज्ञाने हेतुः किं त्वर्थाकारता हेतुः सन्निकर्षद्वारा । अन्यथा स्वप्नादौ मनःसंचाराभावेनार्थभानायोगात् । अतो विभुत्वेनैव सर्वत्र सन्निकृष्टस्यात्मनः संचारो नापेक्ष्यत इति । आपत्तिग्रहणं च पुरुषस्य पारमार्थिकाकारप्रतिषेधार्थम् । यथा हि विषयासन्निकर्षकालेऽपि स्वप्नादौ तद्भानायागत्या चित्तस्य तदाकारः परिणाम इष्यते नैवं पुरुषस्य चित्तवृत्त्यभावेऽपि तद्भानं भवति येन पुरुषेऽपि वृत्त्याकारः परिणाम इष्येत किं तु स्फटिके सन्निकृष्टजपालौहित्यस्येव चित्तवृत्तेः प्रतिबिम्बमेव लाघवादिष्यते उभयत्राकारान्यपरिणामकल्पने गौरवात् स्फटिकदर्पणादेः स्वप्रतिबिम्बितवस्तुप्रकाशकत्वस्य सिद्धत्वाच्चेति । तदिदं वृत्तिबिम्बितमेव*वृत्त्याकारापत्तिरित्युक्तं सूत्रकारेणेति । भाष्यकारः पुरुषस्य बुद्ध्याकारतां प्रतिपादयितुमादौ बुद्धेरेव रूपमाह । अपरिणामिनीति । भोक्तृशक्तिः पुरुषाख्या ऽपरिणामिनी अतो नापि गतिमती ततो न स्वप्रज्ञप्तौ चित्तस्येव पुरुषस्य ज्ञानं संभवति किं तु वृत्तिरूपपरिणामिन्यर्थे चिति प्रतिसंक्रान्तेव प्रतिबिम्बरूपेण संचरितेव सती तद्वृत्तिमनुपतति तद्वृत्तिं चेतनवत्करोतीत्यर्थः । अन्यथा हि घटमहं जानामीति बुद्धिवृत्त्यनुपपत्तिः बुद्धेरनर्हत्वात् अचेतनत्वाच्चेत्युत्तरसूत्रे वक्ष्यति । अथाविवेकादेवैतादृशी बुद्धिवृत्तिरस्ति चेत्सत्यं, तथाप्यविवेक एव प्रतिबिम्बमूलकः दोषान्तराभावात् तथा चेतनभानार्थमपि वृत्तौ तत्प्रतिबिम्बः कल्प्यते बुद्ध्यारूढतयैव शब्दादिवदात्मनोऽपि भानादिति । इदमेव प्रतिबिम्बं बुद्धेश्चिच्छायापत्तिरित्युच्यते तथा बुद्धेरर्थाकारतावत् आत्माकारतेत्यप्युच्यत इति

* वृत्तिबिम्बितत्वमेवेति वेदभविष्यत्पाठान्तरम् ॥

मन्तव्यम् । यद्यपि घटाद्याकारपरिणामवदात्माकारपरिणाम एव बुद्धेर्भवति तथापि प्रतिबिम्बतुल्यतया स एव प्रतिबिम्बमप्युच्यते । बुद्धेरूपं प्रदर्श्य पुरुषस्य तदाकारतापत्तिं दर्शयति । तस्याश्चेति । हिशब्दोऽवधारणे तस्या अपि चितेर्ज्ञानरूपा वृत्तिर्बुद्धिवृत्त्यविशिष्टेवेत्याम्नायते व्यवह्रियते । तत्र हेतुं प्राप्तेत्यादि । प्राप्तश्चैतन्योपग्रहश्चैतन्यप्रतिबिम्बं येन एतादृशं रूपं यस्या बुद्धिवृत्तेस्तदनुकारिमात्रतया तत्प्रतिबिम्बाधारतामात्रेणेत्यर्थः । द्रष्टा दृशिमात्र इति सूत्रेऽपीदमेव वाक्यं भाष्यकारैः प्रमाणत्वेनोपन्यस्तं वृत्तिसारूप्यमितरत्रेत्यत्राप्येतदुक्तमिति स्मर्तव्यम् । ननु जानाम्यहं क्रुद्धोऽहं भीतोऽहमित्यादिरूपता वृत्तेरेवेति प्रागेवोक्तं तर्हि निर्विकल्पकस्य वृत्तिबोधस्य स्वरूपं कीदृशमिति । उच्यते । यादृशं ज्ञानक्रोधादिवृत्तीनां रूपं तादृशमेव बिम्बप्रतिबिम्बोद्ग्रहणात् तदेव वृत्तिबोधस्य रूपं स च वृत्तिबोधो वृत्त्यविवेकेन जानामीति वृत्त्यन्तरस्य विषय एव भवति ज्ञानचितिबोधादिशब्दानां पर्यायत्वादिति । एकाकारतापत्तावागममपि प्रमाणयति । तथा चोक्तमिति । न पातालमित्यादेरयमर्थः । गुहाहितं गह्वरेष्ठं पुराणमित्यादिश्रुतिस्मृतिषु यस्यां गुहायां गुह्यं शाश्वतं ब्रह्म ब्रह्माश्रयभेदात् चात्मसामान्यं निहितं सगुप्तम् इति गीयते । सा गुहा न पातालादि किं तु ब्रह्मशक्त्यविशिष्टा बुद्धिवृत्तिमेव कवयः पण्डिता वदन्तीति । अविशिष्टता च परस्परं प्रतिबिम्बनादुभयोरेव विषयाकारत्वचेतनसाम्यमित्युक्तम् । अतो विविच्य ग्रहणायोग्यतयाऽवस्थितिरेवात्मनः गोपनं गुहेति श्लोकतात्पर्यार्थः । तदेतदेकाकारत्वमादित्यपुराणेऽप्युक्तं

नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥

इति । ननु भवतु चितेः स्वबुद्धिसंवेदनं शब्दादिसंवेदनं तु कथं भवेत् बुद्धिवच्छब्दादीनामपि चितौ प्रतिबिम्बनसामर्थ्याङ्गीकारे सर्वदैव सर्वार्थभानप्रसङ्गात् । कथं वा चितेः स्वपरवेदनम् । उक्तं ह्यनयस्याः चित्तवत् पुरुषेऽपि समानेत्याशङ्कानिरासायोत्तरसूत्रं प्रवर्त्तिष्यते तत्सूत्रं भाष्य

कारः प्रकारान्तरेणाप्युत्थापयति । चतश्चेति । अतो बुद्धिपुरुषयोर्वृत्त्यवि-भागाच्च तदन्यथानुपपत्तेश्चेति यावत् । एतत् चागामिसूत्रप्रतिपाद्यम् । चङ्गीक्रियतइत्यर्थः । चकारोऽस्मदुक्तप्रयोजनसमुच्चयार्थः ।

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

सर्वे यद्दीतृग्रहणग्राह्याः पुरुषस्यार्था भोग्या अस्मिन्निति सर्वार्थम् । अयं घट इत्यनन्तरं घटमहं जानामीति बुद्धेर्वृत्त्यन्तरस्य यद्दीतृग्रहणग्रा-ह्याकारस्यायं घट इतिवृत्तिवदेव साक्षिभास्यस्य प्रायशो दर्शनात् । सर्वा-र्थत्वे हेतुः द्रष्टृदृश्योपरक्तमिति । द्रष्टृदृश्योभयाकारमित्यर्थः । बाधकं विना सविकल्पग्रस्त्याकारताप्यानुभाव्यस्य चित्ते सर्वसम्मतत्वादिति भावः । तथा च बुद्धिसंवेदनमेव बुद्धिस्वस्य शब्दादेः स्वस्य च संवेदनं यदि शब्दादि-पुरुषोभयाकारा बुद्धिवृत्तिः पुरुषे प्रतिबिम्बिता भासते इदमेव शब्दादेः पुरुषस्य च दृश्यत्वं बुद्धेर्दृश्यत्वप्रदित्यतो न पुरुषदर्शनार्थं द्रष्टृन्तरापेक्षा नापि कर्मकर्तृविरोधो इन्तःकरणद्वारत्वादिति भावः । एतेन सर्वार्थ-त्वेन भाष्यकारोक्त बुद्धिपुरुषयोरविविक्ताकारत्वमपि सिद्धम् । बुद्धेः पुरुषा-कारतातिरेकेण पुरुषत्वाभावात् । पुरुषस्य बुद्ध्याकारतायाश्च पूर्वसूत्रे-णैवोक्तत्वादिति । चेत्वत्वात्यथानुपपत्त्या च. सिध्यति न बुद्धेः पुरुषोपरागं प्रतिपादयन्सूत्रं व्याचष्टे । मनो हीति । उपरक्त तदाकारम् । अन्यथा ग्रहणानुपपत्तेः । युक्तिपूर्वकं दृष्टृपरागमाह । तत्स्वयं चेति । तन्मनः स्वय-मपि पुरुषस्य विषयत्वात् स्वीयचैतन्यलक्षणवृत्तिविशिष्टेन पुरुषेण विष-यिणा भवद्रूपम् आकारित सविकल्पस्य ग्रहणहेतुत्वात् । बुद्धिवृत्तौ च पुरु-षस्याप्यदृस्य प्रतिबिम्बातिरेकेणानित्यसविकल्पकागमभवादिति । तस्मादिति-चित्तमेवोभयोपरक्ततया शब्दादिविषयरूपेण विषयिपुरुषरूपेण च निर्भा-सते । साक्षिणि प्रतिबिम्बित सदिति विषयविषयिनिर्भास, तत्र हेतु चेतनाचेतनस्वरूपापन्न तदाकारम् । एतदेव विवृणोति । विषयात्मकमप्य-विषयात्मकमिवेति अचेतनमपि चेतनमिवेति । इवशब्दार्थं दृष्टान्तेनाह । स्फटिकमणिकल्पमिति । यथा स्त एव स्फटिकमणिः पार्श्वस्थजपाकुसुम-

नीलयोः प्रतिबिम्बनात्स्वीयरूपेण सह त्रिरूप इव भवतीति । एवं चित्तमपि विषयात्मनो प्रतिबिम्बनात् ग्रहीतृग्रहणग्राह्यात्मकरूपत्रयवदिव भवति, अतः सर्वार्थमित्युच्यत इत्यर्थः । चित्तमेवं चेत्कारणान्येषां सविकल्पस्त्विष्या कारग्रहणसामर्थ्यं नास्तीत्युक्तम् । अत्र च स्फटिकदृष्टान्तो न सर्वांशे युक्तः स्वार्थाकारपरिणामस्यैव स्वप्रानुरोधेनेष्टत्वात् स्फटिके च प्रतिबिम्बमात्रस्य स्वीकारात् । किं तु तत्तद्वस्तुसन्निकर्षेण तत्तद्रूपतया प्रतीयमानतामात्रांशे स्फटिकस्य दृष्टान्त इति मन्तव्यम् । यदेतदुक्तं चित्तस्य द्रष्टृदृश्यसारूप्यम् इदमेव भवबीजाविवेकस्य कारणमिति प्रतिपादयति । तदनेनेति। केचिद्बाह्यार्थवादिनः चित्तातिरिक्तचेतनानभ्युपगन्तारो वैनाशिकाः । अपरे विज्ञानवादिनः । लोक्यतइति लोकः । तदुक्तं विज्ञानवादिभिः ।

अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

इति। तेषां च या दनामय भाव । चित्तस्य चेतनैकरूपता स्वीकृता सर्वांश पुरुषेण ग्राह्यार्थेन वा अनादिवासनावशात् स्वत एव चित्तस्यानन्तपरिणामस्वीकारसम्भवात् । दुग्धस्य दधिरूपतावदिति । अनुकम्पामुखेन तेषु समाधानमाह । अस्ति हीति । इत्यन्त बीजमित्यर्थः । एतेन यदाधुनिका वेदान्तिब्रुवा आहुः । विषयदोषात् करणदोषाद्वा चैतन्ये भ्रमो न भवति विषयकरणदोषयोर्भ्रममात्रकल्पितत्वेन भ्रमात्पूर्वं तयोरभावात्तथापि स्वनिर्वचनीयाविद्यामात्रादिति । तद्धेयम् । चैतन्येपि चित्तवदेव सकलवस्तुप्रतिबिम्बेन सारूप्यस्यैव विषयगतदोषस्य प्रपञ्चारोपहेतुतालाभात् सर्ववस्तूनां भ्रममात्रकल्पितत्वस्य चासिद्धेः शुक्तिरजतादिस्थले रूपेण सारूप्यदोषेणैवाध्यासोपपत्तावध्यासहेतुतया तदभिप्रेतानाद्यविद्यायाः कल्पनानवकाशाच्चेति । तत्रादौ विज्ञानवादिनं बोधयति । समाधीत्यादिना रूपमवधार्यतइत्यन्तेन । भ्रमस्थले ज्ञेयार्थस्य चित्तमात्रताया अस्माभिरप्यभ्युपगमात् । समाधिप्रज्ञायां प्रज्ञेय इत्युक्तमर्थस्य सत्यत्वताभाय । तथा चायमर्थः । विशारदोऽवरोर्थश्चित्ते प्रतिबिम्बितो योऽनुभूयते

स तस्य चित्तस्यालम्बनीभूतत्वाच्चित्तादन्यः । तत्र हेतुः । स चेदिति । स चेदर्थश्चित्ताकारमात्रं स्यात् कथं तर्हि प्रज्ञयैव प्रज्ञाकारो गृह्येत कर्मकर्तृविरोधात् पुरुषस्यानङ्गीकारात् । पुरुषप्रज्ञया पुरुषसिद्धिरर्थप्रज्ञया चार्थस्यापि सिद्धाचित्त्वादिति । अतो विज्ञानातिरिक्तो विज्ञेयोऽर्थः सिद्धः । अनयैव युक्त्या पुरुषानभ्युपगन्तारं बाह्यार्थवादिनमपि बोधयति । तस्मादिति । तस्मात्प्रज्ञारूपस्याप्रज्ञायाह्यत्वाभावादेव प्रज्ञायां प्रतिबिम्बीभूतः प्रतिबिम्बरूपेण जातो यो ज्ञानाकारो येन गृह्यते स पुरुष इत्यपि सिद्धमित्यर्थः । ननु स्वमगृहीत्वैव स्वस्य प्रज्ञारूपं गृह्णातु चाकाशावग्रहेऽपि शब्दवदिति चेन्न । शब्दवत्केवलस्याकारस्याग्रहणात् । अयं घट इति ज्ञानमभूदित्यादिरूपेण रूपादिवद्धर्मिपुरस्कारेणैवाकारानुभवादिति । ननु कर्मकर्तृविरोधः सूत्रकारेणैवोक्तो न तत्स्वाभासमित्यनेनातो भाष्यकारस्य पौनरुक्त्यमिति, मैवम् । तत्र चित्तस्य चित्तग्राह्यत्वं निराकृतमत्र चित्ताकारस्य चित्तग्राह्यत्वं निराक्रियते इति विशेषादिति । पुरुषचित्तदर्शिना यथोक्तप्रकारैर्विवेकज्ञानमेव तत्त्वज्ञानमिति वेदान्तोक्तोपासनादिव्यावृत्त्यर्थं नास्तिकादिज्ञाननिरसनार्थं चावधारयति । एवं ग्रहीत्रिति । ग्रहीत्रादित्रितयं परस्परविजातीयतया ये विभजन्ति विवेचयन्ति त एव सम्यग्दर्शिन स्तैरेव पुरुषो लब्धः । अन्ये तु भ्रान्ता इत्यर्थः । तथा च श्रुतिः ।

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

'अथात आदेशो नेति नेति' 'न ह्येतस्मादिति नेत्यन्यत्परमस्ती'त्यादिः ॥

स्मृतिश्च ।

अव्यक्तात्मे ऽविशेषान्ते विकारेऽस्मिंश्च वर्त्तते ।
चेतनाचेतनान्यत्वज्ञानेन ज्ञानमुच्यते ॥

इत्यादि । 'आत्मैवेदं सर्वं' 'ब्रह्मैवेदं सर्वं' 'वासुदेवः सर्वमि'त्यादिश्रुतिस्मृतयस्तु शक्तिमद्वाक्यभेदेनैवोपासनार्थं प्रवर्त्तन्त इति न तद्विरोधः । एतेन सीधात्मप्रकरणेषु आत्मेत्यश्रुतीनामवैधर्म्यलक्षणाभेदेन विवेकएव तात्पर्य

मिति द्रष्टव्यम् । विवेकज्ञानस्यैव सम्यग्ज्ञानतया मोक्षहेतुत्ववचनात् । परमात्मप्रकरणं तु जीवादपि विवेकेन परमात्मन एकस्यैवात्मत्वे तात्पर्यमिति मन्तव्यम् । द्वितीयपादे विवेकख्यातिरविप्लवा हानोपाय इत्युक्तम् । अत्र तु विवेकज्ञानस्यैव सम्यग्ज्ञानत्वोपपादनेन मोक्षहेतुत्वं प्रमापितम् । विवेकस्वरूपं च परीक्ष्यत इति विवेकः । चित्तादात्म्यविवेके हेत्वन्तरप्रदर्शकतया सूत्रमवतारयति । इतश्चेति । इतश्च चित्तातिरिक्त । पुरुष इति शेषः ।

तदसंख्येयवासनाभिश्चित्र*मपि परार्थं संहत्यकारित्वात् ॥२४॥

यदुक्तं चित्तस्य सर्वात्मकत्वाङ्गीकारे असंख्यवासनाश्रयात् स्वत एव चित्तस्यापि परिणामित्वस्तु किं पुरुषेणेति । तन्न । यतस्तच्चित्तमसंख्येयवासनाभिश्चित्रितमपि परार्थं परस्यान्यस्य भोगापवर्गार्थमेव विना तौ न स्यातुं परिणामितुं वा शक्नोति संहत्यकारिपदार्थानां लोके परार्थत्वदर्शनादित्यर्थः । तथा च पुरुषार्थसमाप्तौ चित्तविलयेन मोक्षोपपत्तिरित्यत्रापि सूत्रतात्पर्यम् । सूत्रं व्याचष्टे । तदेतदिति । भोगापवर्गार्थं सुखादिसाक्षात्कारार्थम् । संहत्यकारित्वात् इतरसाहाय्येनार्थक्रियाकारित्वात्, गृहवदिति । गृहं हि शयनादिकार्यमास्तरणशरीरादिसाहाय्येनैव करोति पुरुषस्तु नित्यचैतन्यरूपतया चैतन्यार्थं नान्यमपेक्षते अन्या चार्थक्रिया पुरुषस्य नास्तीति स न संहत्यकारीत्याशयः । यत्तु संघातपरार्थत्वादिति सांख्ये प्रोक्तम् । तत्र संहननमारम्भकं संयोगो विवक्षितः स चावयवावयविभेदात् शय्यासनगृहादिषु सत्त्वादिषु चास्ति न तु पुरुष इति । ननु चित्तं संहत्यापि करिष्यति स्वार्थमपि भविष्यति कः खलु विपक्षबाधकस्तर्क इत्याकाङ्क्षायामाह । संहत्यकारिणेति । न सुखचित्तमिति । सुखचित्तं भोगचित्तं न सुखार्थं न चित्तस्य भोगार्थं तथा तत्त्वज्ञानचित्तमपवर्गचित्तं न चित्तस्यापवर्गार्थं चित्तस्य भोगापवर्गयोरपि कार्यतया सार्थकत्वनियमेनानवस्थाप्रसङ्गात् । यत्कार्यं तत्सार्थकमिति हि सर्वसंमतम् । अतश्चित्तस्यैतदुभयमपि परार्थमित्यर्थः । पुरुषस्य च भोगापवर्गौ स्वरूपचैतन्यरूपतया न कार्याविति नानवस्था

* चित्रमिति पाठो बहुसंमतः ।

पुरुषार्थत्वव्याह्निनामिति भावः । पुरुषस्य भोगो हि सुखादिसाक्षात्कारः । अपवर्गश्च विवेकख्यातिसाक्षात्कारो वा स्वरूपावस्थानो वा सर्वथैव चैतन्यमात्रा एव अपरिणामित्वाविद्धमेवाच्चेति । ननु परार्थतामात्रेण न पुरुषसिद्धिर्भिनाशादीनामपि परार्थत्वसम्भवात् विनाशार्थमेवोत्पत्तेः परैर-भ्युपगमादित्याशङ्कायामाह । यश्चेति । भोगापवर्गार्थत्वानेवात्र परः साध्ये प्रविष्टो ऽतो न सामान्येन येन केन चित्परेण सिद्धसाधनमर्थान्तरं चेत्यर्थः । स्वोत्तरोत्पन्नक्षणिकचित्तस्य भोगार्थकतया पराभिमतं सिद्धसाध नमपाकरोति । यत्तु किं चिदिति । स्वरूपेण आत्मरूपेण भोक्तृतयेति यावत् । यदित्यति । यस्त्वसौ विशेषः पुरुषाख्यः परः स कूटस्थनित्यत्वात् न संहत्यकारीति न तस्य परार्थत्वापत्त्यानवस्थितिरित्यर्थः । तदेव बुद्धि-पुरुषविषयाणां विवेकं प्रदर्श्य एतज्ज्ञानादाद्यं मोक्षमार्गं प्रतिपादयति ।

## विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥

मातृमानमेयात्मकस्याखिलप्रपञ्चस्य सप्ताय.पिण्डवदेकीभावा-पन्नस्य यथोक्तप्रकारैरन्योन्यं विशेषदर्शिनो विवेकसाक्षात्कारिणश्चित्त-स्यात्मभावे भावना स्वसत्ताजिज्ञासा कोऽहमासमित्यादिरूपा भाष्ये व्या-ख्येया । तस्या भयशोकप्रवृत्तिनिवृत्त्यादनर्थहेतोर्निवृत्तिराद्यो मोक्षो भवती त्यर्थः । स्वर्गनरकमोक्षादिभिर्हि विचित्ररूपता चित्तस्यैव भवति न तु सदैकरूपचिन्मात्रस्य न ममेत्यवधारणे सति नैवात्मभावचित्तोदेतीति भाव । तथा च श्रुतिः । 'एतं ह वाव न तपति किमहं साधु नाकरव किमहं पापमकरव'मितीत्यादिः । तदेतदुक्तं पञ्चशिखाचार्यै'रादस्तु मोक्षो ज्ञानेने'ति । अत्रादौ भाष्यकार आत्मभावभावनामेव सकारणां प्रतिपादयति । यथेत्यादिना । तत्रापीति । पुरुष इति शेषः । विशेषदर्शन-बीजमिति । आत्मभावजिज्ञासाङ्कुरेति शेषः । इत्यनुमीयत इति । विवि दिषन्ति यज्ञेनेत्यादिश्रुतेः । पापक्षयाद् शुद्धमतिर्योऽहोति ज्ञानमुत्तममिति स्मृतेश्चेति शेषः । तस्य यथोक्तकर्मवतः स्वाभाविकी घेहिकसाधननिर-पेक्षा, तथा च यथोक्तं कर्म आत्मभावनायाः कारणम् । तत्र च नैहिकत्यनि-

यम इत्यायातम । ऐहिकसाधनशून्यस्य प्राक्तनतयाविधकर्माभावे च या भाव ना नेद्देति प्रत्युत देहाद्यात्मतायामेवाभिरुचिर्भवतीति अत्र पूर्वाचार्यवाक्यं प्र माणयति । यस्याभावादिति । यस्य कर्मणोऽभावादिह वक्ष्यमाण फलमुक्त पूर्वा चार्यैः । तदेवाह । स्वभावमिति । स्वभावमात्मभावं त्यक्त्वा एवा सत्कर्मशू न्यानां पूर्वपक्षे नित्यदेहाद्यात्मतायामेव रुचि र्दृष्टातिशयो भवति । अ रुचिश्च तत्त्वनिर्णयेऽन्यथे । आत्मभावनायाः कारणमुक्त्वा स्वरूपमा ह । तत्रात्मेति । कोऽहमास किं नरादिरूप आस कथमास हुं गेन दयत* यास किं स्विदिदं वर्तमानमपि मम स्वरूपं किं देहो वा मन आदिर्वा कथ स्विदिदं केन वा प्रकारेण पुण्यपापादिना तिष्ठतीत्यादिरूपे । के भवि ष्याम इत्याक्षेपस्वरूप यहुदन तथा च यज्जिज्ञासेत्यपपादिनिद्र सये विशेषदर्शन पुरुष सपादयति सैवात्मभावनेत्यथ । आत्मभावनानिवृ त्तेर्व्याख्याय सूत्रवाक्यार्थमाह । सा त्विति । विशेषदर्शनात्कुतो निव त्तिरिति प्रश्नस्योत्तरमाह । चित्तस्येति । एष भावरूपो विचित्र परिणाम आत्मनो न भवति किं तु चित्तस्यैवाविद्याजन्यत्वात् अविद्यायाश्च चित्तधर्मत्वात पुरुषस्त्वविद्याशून्यत्वात्शुद्ध पापपुण्यविवर्जित । ततश्च चित्तधर्मैर्जन्ममरणसुखदुःखादिभिरपरामृष्ट कदाप्यसङ्ग इति । तत इति विशेषदर्शनादस्य कुशलस्यात्मभावना निवर्तत इत्यथ । तन्निवृत्ते स्वर्गनरकादिषु रागद्वेषादिनिवृत्ति फलमिति । तस्य विशेषदर्शिनो लब्ध य सम्प्रज्ञातयोग वक्ष्यमाणसूत्रेण च कारणभूतमाह ।

## तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

कैवल्ये प्राग्भारो यस्य तत्कैवल्यप्राग्भारम । कैवल्याभिमुखमिति यावत् व्याचष्टे । तदानीमिति । तदानीं विशेषदर्शनावस्थाया स्वर्गादौ रागवशात चित्तमन्यथा भवतीत्यनेनान्वय । विषयप्राग्भार विषयाभिमुखम ज्ञाननिम्नमज्ञानमार्गप्रचारि एवमुत्तरत्र न चानेन कोमलकपटकस्त त्पन्नमात्रेण विशेषदर्शनेनैव कृतकृत्यता भवति पूर्वसंस्कारवशात् अन्त रान्तरा मोहादयोऽपि भवन्तु वृत्तीनामनुवृत्तेरित्याह ।

* दु पाठद्वयन य शामात दु खल दर्शनगतानां मते वा सत्यम् ।

## तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

व्याचष्टे । विवेकेति । विवेकप्रत्ययनिम्नस्येत्यस्य विवरणं सत्त्वे-त्यादि । सत्त्वपुरुषान्यतामात्रेण प्रवहणशीलस्येत्यर्थः । तच्छिद्रेषु स्थानेषु अविद्यारूपाणां प्रत्ययानामाकारा अस्मीत्यादयश्च प्रदर्शिताः । अस्मीति । देवमनुष्यादिरूपोऽस्मीत्यर्थः । केवलास्मितायां सम्प्रज्ञातयोगेऽपि सत्त्वात् क्षीयमाणेभ्यो बीजेभ्यः क्षीयमाणबीजेभ्य । एतस्य विशेष्यं पूर्वं संस्कारेभ्य इति । ननु ज्ञाने जातेऽपि चेत् पूर्वसंस्कारवशाद्व्युत्थानदशायां कदाचिदविवेकोदयः कथं तर्हि सम्प्रज्ञातप्रवाहेणापि अविद्यानिवृत्तिः स्यात्तत्राह ।

## हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथा संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं क्लेशानामिवोक्तं पूर्वाचार्यैरित्यर्थः । 'ध्यानहेयास्तद्वृत्तयः' ते प्रतिप्रसवहेयाः सूक्ष्मा इति सूत्राभ्यां यथा स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशौ प्रोक्तौ तथा तत्संस्काराणामपीति फलितार्थः । एतदेव व्याचष्टे । यथेति । यथा सम्प्रज्ञातयोगिनो व्युत्थानदशायां पूर्वसंस्कारजाः क्लेशा अविद्यादिवृत्तयो दग्धबीजतुल्याः सन्तो न संस्कारं जनयन्ति तथा पूर्वसंस्कारा अपि सम्प्रज्ञातपरम्पराजनितेन निष्ठारूपेण ज्ञानाग्निना दग्धबीजतुल्याः सन्तः प्रत्ययं न प्रसुवत इत्यर्थः । पूर्वसंस्काराः प्राचीनक्लेशसंस्काराः ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धात्संस्कारो नोत्पद्यत इत्याशयेन पूर्वपदम् । अत्र ज्ञानमात्रोऽपि क्लेशवदुपलक्षित इति । नन्वेकदा चेद्दृष्टं मम जन्म मरणं दुःखादिकं नास्तीति तर्हि कदाचिदन्तरान्तरा मोहेऽपि तद्धानार्थं प्रवृत्तिर्नोपपद्यते मोहस्यापि चित्तधर्मतया पूर्वं निश्चितत्वादिति चेन्न । चित्तस्य मोहसत्त्वे पुनश्चित्तस्य भवदु खोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेनैव ज्ञानिभिरपि चित्तस्यात्यन्ततो मोहनिवृत्त्यर्थं यतनात् । भोगश्च चित्तमात्रस्यैवेत्यसकृदावेदितमिति । ननु संस्कारत्वाविशेषात्तत्त्वज्ञानसंस्कारा अपि किं सम्प्रज्ञातनिष्ठया नश्यन्ति, नेत्याह । ज्ञानसंस्कारास्त्विति । अधिकद्धत्वादिति शेषः । तर्हि कथं तेषां नाशः स्यादिति, तत्राह । इति

परिणामक्रमः समाप्यते कृतार्थपुरुषाणां भोगोपयिकः परिणामः पुनर्न भवतीत्यर्थः । क्रमस्वाभिलाप्यमुत्तरसूत्रेण व्याख्यास्यते । तत्र इतिपदं व्याचष्टे । तस्य धर्ममेघस्योदयादिति । कृतार्थानामिति । पुरुषाणामिति शेषः । तथा च कृतार्थपुरुषस्वामिको गुणानां परिणामक्रमः समाप्यत इत्यर्थः । न तु गुणानामखिलस्य परिणामक्रमस्य समाप्तिरुक्ता कृतार्थं प्रति नष्टमप्यनष्टमित्युत्तरसूत्रादिति । समाप्तौ हेतुमाह । नहीति । नहि सत्त्वादयो गुणाः कृतभोगापवर्गा अत एव समाप्तक्रमाः तं पुरुषं प्रति क्षणमप्यवस्थातुं समर्थाः स्थितिहेतुपुरुषार्थाभावादिति । यदि च सूत्रभाष्ययोर्गुणशब्देनात्र बुद्ध्यादय एव पुरुषोपकरणान्युच्यन्ते तदा यथाश्रुतमेव व्याख्येयम् । अत्रापि ततानां चेतनार्थतया चैतन्याधीनसत्ता वेदान्तिभिरुच्यमाना सिद्धेति स्मर्तव्यम् । इयमपि तृतीया मुक्तिः पञ्चशिखाचार्यैरुक्ता 'कर्मक्षयात्* तृतीयस्तु व्याख्यातं मोक्षलक्षण'मिति । अत एव तत्त्वसमाससूत्र 'त्रिविधो मोक्ष' इति । इदमत्रावधेयम् । यदेताभ्यां सूत्राभ्यां ज्ञानस्यानन्त्यात्स्वार्थेनाप्यात् मोक्ष उच्यते इह मुमुक्षुत्वाभिप्रायेणोक्त वैराग्यादेव सुखेन मोक्षसिद्धेः', न तु सार्वज्ञादिकं विना मोक्षो न भवतीत्याशयेन । यत सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति सूत्रे भाष्यकृता ईश्वरस्यानीश्वरस्य प्राप्तविवेकज्ञानस्येतरस्य चेत्यनेनासर्वज्ञस्यापि अभिमाननिवृत्तिमात्रादेव मोक्ष उक्त इति । तथा चोक्तं 'विवेकख्यातिरविप्लवा हानोपाय' इति । 'सति मूले तद्विपाको जात्यायुर्भोगा' इति च । संसारबीजं हि अनात्मन्यात्मबुद्धिरूपाऽविद्या रागद्वेषधर्माधर्मतद्विपाकादिहेतुत्वात् सा चेद्विवेकख्यात्या नाशिता तर्हि तत एव संसारच्छेदे सार्वज्ञ्यापेक्षा नास्तीति । तथा च विष्णुपुराणे

अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसम्भूतिबीजमेतद्द्विधा स्थितम् ॥

इति । ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः । स चायमर्थः कथं

* कर्तव्यादिति पा० २ ।

क्रमशब्दाल्लभ्यते क्रमशब्दस्य पौर्वापर्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थं पृच्छति । अथेति । अयमेतत्सूत्रीय. । अत्र प्रत्युत्तरं सूत्रम् ।

## क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥

क्षणप्रतियोगी क्षणस्याव्यवस्य विरोधी क्षणेनाप्यनन्तरित इति यावत् । एवंरूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रमिति विशेष्यदलार्थः । परिणामश्च पूर्वधर्मापाये धर्मान्तरोत्पत्तिरित्युक्तमेव, ईदृशे च क्रमे प्रमाणप्रदर्शनपरं परिणामापरान्तनिर्ग्राह्य इति विशेषणम् । भाष्यकारस्तु क्षणप्रतियोगीत्यस्य पर्यवसितमर्थमाह । क्षणानन्तर्यात्मेति । क्रम इत्युत्तरेणान्वयः क्षणानन्तर्यात्मा क्षणानन्तर्यधर्मक । आनन्तर्यं चाव्यवधानं क्रमस्तु पूर्वापरीभावः । तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रे परिणामक्रमशब्दार्थः । अनवच्छिन्नधारायां प्रमाणप्रदर्शक सूत्रावयवं व्याचष्टे । परिणामस्येति । पूर्वान्तापेक्षया वस्त्रादिरूपस्य परिणामस्यापरान्तेन चरमावस्थया अनवच्छिन्नपरिणामधारा अनुमीयत इत्यर्थः । अत्र युक्तिमाह । नहीति । अननुभूतो ऽप्राप्तो यथोक्तक्रमो यैरेवंभूता क्षणा यस्याः साऽननुभूतक्रमक्षणा पुराणता, तथा च वस्त्रस्यान्तिमकाले दृश्यमाना पुराणता नह्यननुभूतक्रमक्षणा सम्भवतीत्यर्थः । अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामतोऽप्यविरलः क्रमोऽनुमीयत इति । नन्वपरान्तेनानित्येष्वेव क्रमः सिद्धो न तु प्रधानेऽपि तस्य चरमावस्थाया अभावादतो गुणानां परिणामक्रमे किं प्रमाणं येन तत्समाप्तिः पूर्वसूत्रोक्ता घटेत तत्राह । नित्येषु चेति । नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टोऽनुमित इत्यर्थ. । धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति प्रागुक्तत्वादिति भाव । ननु परिणामक्रमाङ्गीकारे नित्यत्वहानिरित्याशङ्कायामाह । द्वयी चेति । तथा च परिणामित्वेन कूटस्थनित्यतैव विरुध्यते न नित्यतासामान्यमित्याशयः । नित्यस्य सामान्यलक्षणमाह । यस्मिन्निति । तत्त्वं न विहन्यते स्वरूपं नातीतं भवति यत्र चातीततांशून्यत्वमात्रं नित्यस्य सामान्यलक्षणमिति बोध्यम् । तच्चोभयसाधारणमित्याह । उभय-

स्येति । गुणपुरुषयोरित्यर्थः । पूर्वसूत्रे परिणामशब्देन व्याख्यर्थं स्वरूपास्तिताक्रमं दर्शयितुं क्रमसामान्यं विभजते । तत्रेति । शुक्लादिषु महदादिषु लब्धपर्यवसानो विनाशित्वादित्यर्थः । गुणेष्विति । अत्रापि परिणामापरान्तनिर्ग्राह्य इत्यन्वयेति । परिणामस्य क्रमं द्विधा व्याख्याय तृतीयं स्वरूपास्तितायाः क्रमसंकीर्णोदाहरणेनाह । कूटस्थेति । बहूनां चित्तविवेकेन कदा चित्परिणामाभासोऽपि स्वादिन्याशयेन स्वरूपमात्रप्रतिष्ठेत्युक्त तस्यैव स्वरूपाख्यानं मुक्तपुरुषेष्विति । स्वरूपास्तिता च तत्तत्क्षणमात्र तत्क्रमश्च पुरुषेष्वप्यस्ति । इदानीं स्थित्वा पश्चात्स्थास्यतीति व्यवहारात् । अन्यथा सर्वकालसंबन्धरूपनित्यतानुपपत्तेश्चेत्यतस्तत्राप्यलब्धपर्यवसान इति, क्रम इति शेषः । नन्वेवमात्मनोऽपि अस्तिताक्रमस्वीकारे षड्भावविकारशून्यत्वसिद्धान्तविरोध इत्याशङ्कां परिहरति । शब्दपृष्ठेनेति । स च क्रमोऽस्त्यादिक्रियामादायैव शब्दपृष्ठेन शब्दानुसारिणा व्यवहर्त्रा कल्पितो भवति । न तु जन्मोत्तरकालीनमस्तितापरिणाममादायेत्यर्थः । तथा चास्तित्वाख्यक्रियैव षड्भावविकारान्तर्गता पुरुषे निषिद्धेत्याशय. । सा च क्रियारूपिण्यस्तिता वृद्धिहेत्ववयवोपचयरूपेति विभाग । गुणेष्वलब्धपर्यवसानः परिणाम इति सूत्रांशिपति । अथेति । अस्य संसारस्य जन्मादिपरिणामजातस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा । आद्ये अलब्धपर्यवसानोक्तिविरोधः । अन्त्ये परिणामक्रमसमाप्तिर्गुणानामिति पूर्वसूत्रविरोध, तथा भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतिविरोधश्चेति । पूर्वसूत्रे कृतार्थपुरुषं प्रत्येव परिणामक्रमसमाप्तिर्गुणानामुक्ता न तु सामान्यत इत्याशयेन समाधत्ते । अवचनीयमेतदिति । प्रत्युत्तरानर्हमेतद्वचनमित्यर्थः । उक्तप्रश्नस्योत्तरानर्हत्वं प्रतिपादयितुम् आज्ञानुत्तरार्हं द्विविधप्रश्नं दर्शयति । अस्ति प्रश्न इति । सर्वो जातो मरिष्यतीति एकान्तवचनीयोऽविभज्यवचनीयः प्रश्नः । अस्य च ओम्भो इति प्रतिवचन सत्यं भो इत्यर्थः । ओं भो इति पाठस्तु समीचीन. । अविभज्यवचनीयं प्रश्नं प्रदर्श्य विभज्यवचनीयं प्रश्नान्तरं प्रदर्शयति । अथ सर्वो मृत्वा जनिष्यतीति विभागेन वचन प्रत्युत्तरं दर्शयति ।

प्रत्युदितेति। विभज्यवचनीयप्रश्नं लौकिकमपि दर्शयति। तथा मनुष्येति। वतप्रश्नस्तु यथाश्रुत एकान्तत एवावचनीय इत्याह। अथ त्विति। अयमित्युक्तं विशिष्याह। संसार इति। अवचनीयत्वमेवोपपादयति। कुशलस्येत्यादिना दोषइत्यन्तेन। कुशलस्य कुशले गुणकृतस्य संसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतो गुणसृष्टिप्रलयप्रवाहोच्छेदानुच्छेदान्यतरावधारणे दोषः। आद्ये वाधोन्त्ये कस्यापि मुक्तिर्नास्तीति शिष्यमोहापत्तिरित्यर्थः। अस्यापि प्रश्नस्य विकल्प्योत्तरं देयमित्याह। तस्मादिति। तस्मादुक्तादा-नार्यमादौ विकल्पेन व्याख्येयोऽयं प्रश्न इत्यर्थः। तद्यथा। यदि च गुणानां सृष्ट्याद्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्यम्।

अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः॥

इत्यादिवाक्यशतेभ्यः सृष्टिप्रवाहस्यानादित्ववदनन्तत्वस्यापि सिद्धेः शुष्कतर्कस्याप्रयोजकत्वात्। अन्यथा संसारहेत्वदृष्टस्य सर्वस्यैव सादित्वात्संसारस्यानादित्वमपि तर्कविरोधेन न सिध्येत्। भूयश्चान्ते विश्वमायानिवृत्तिश्चेति श्रुतिश्च मायाख्यप्रकृतेः प्रलये व्यापारोपरमाख्यां निवृत्तिमेव वदति। एतेन सर्वमुक्तिरप्रामाणिकीति सिद्धम्। यदि पुरुषस्य संसारोच्छेदः पृच्छ्यते तदा कुशलस्यास्ति नेतरस्येति प्रश्नवाक्यं विकल्प्य प्रतिवचनं सम्भवतीति उत्तरसूत्रमवतारयति। गुणाधिकारेति। गुणाधिकारपरिणामविशेषस्तत्क्रमपरिसमाप्तौ कैवल्यमिति। ततः कृतार्थानामित्यादिसूत्रेण तात्पर्यत. प्रोक्तं तस्य कैवल्यस्य स्वरूपमवधारयतीत्यर्थः। पुरुषार्थशून्यानां गुणानां प्रतिप्रसव. कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति। कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणे अत्यन्तविलयः स बुद्धेः कैवल्यम् एतदेव च प्रधानस्यापि तत्पुरुषं प्रति कैवल्यमुच्यते तेन पुरुषेण सह पुनरसंयोगात्। या तु धर्मधर्म्यभेदाच्चितिशक्तिः स्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपापाये स्फटिकस्य रूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थः।

परस्परवियोगो हि उपाध्युपाधिमतोरुभयोरेव केवलता एकाकिता भवति ते चोभे एव दृश्यभोगनिरस्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते तयोश्चाद्यं कैवल्यं पुरुषस्यापवर्गितमित्युक्तं सांख्यकारिकायाम् ।

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥

इति । ननु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थं पुरुषस्य तत्र निराकृतः मोक्षस्यान्यमात्रनिष्ठत्वे पुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः पुरुषार्थं हि करणानां प्रवृत्तिरिति । इतिशब्दः शास्त्रसमाप्तिसूचनार्थः । भाष्ये कार्यकारणात्मनामिति कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः न तु कार्यमात्रस्थूलशरीर तत्सत्त्वेऽपि कैवल्योदयादिति । ननु स्वस्य स्वप्रतिष्ठत्वानुपपत्त्या कथं स्वप्रतिष्ठत्वं तत्राह । स्वरूपेति । पुरुषस्य पुनर्बुद्धिसत्त्वासम्बन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः । तस्या इति । स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्यव कैवल्यं द्वितीयमिति शेषः ॥

योगग्रन्थसहस्राणां सर्वोपनिषदां तथा ।
सतां च यत्र तात्पर्यं सोऽयं व्यासेन भाषितः ॥
व्याख्यातश्च यथाशक्ति निर्मत्सरधिया मया ।
एतेन प्रीयतामीशो य आत्मा सर्वदेहिनाम् ॥

इति श्रीविज्ञानभिक्षुविरचिते पातञ्जलभाष्यवार्त्तिके कैवल्यपादश्चतुर्थः ॥ ४ ॥

॥ समाप्तं चेदं दर्शनम् ॥

॥ श्रीविश्वनाथो विजयतेतराम् ॥



॥ श्री. ॥

# ॥ योगवार्तिकस्य शुद्धिपत्रम् ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १६ | छिन्नात्स्वर्थंच | छिन्नात्स्वर्थे न |
| „ | २० | समाध्यभ्यासा- | समाध्याभ्यासा |
| ५ | १४ | नतु | न तु |
| ६ | ११ | जित्या | मित्या- |
| ८ | १६ | दृष्ट्वृ | द्रष्टृ |
| ९ | १४ | सुख | सुख |
| „ | २५ | वृत्ति | वृत्ति |
| १० | ८ | न सत्र | नार्मव |
| „ | „ | विरोध | निरोध |
| „ | १५ | सपस्य | सप्स्य |
| १३ | १६ | फेवल | कैवल' |
| „ | २७ | प्रतिबिम्बो। | प्रतिबिम्ब उ |
| १८ | २५ | कारणस्त्र | कारणस्य |
| „ | २६ | योप | विषेप. |
| १९ | २२ | चैतन्ये | चैतन्येन |
| २० | ४ | अनुमान | अनुमेय |
| „ | ७ | वीज् | विश् |
| „ | ९ | यथा | तथा |
| „ | १६ | व्यावृत्यात्र | व्यावृत्यात्रा। |
| ३० | १८ | संयोगाऽ | संयोग |
| ३२ | ८ | देहाद्वे | देहाद्वे |
| „ | ११ | केवलं | कैवल्यं |
| ३३ | ८ | तर्कस्या। | तर्का चास्य वि<br>तर्कस्या |
| „ | १० | विकल्प | वितर्क |
| „ | „ | शब्दार्थो। | शब्दार्थस्या |
| „ | २६ | संयोग | संयोग |
| ३४ | ५ | रूपास्या | रूपस्य |
| „ | १८ | अस्य | अस्या |
| „ | २५ | नुगते | नुगतं |
| ३६ | २ | कस्मिया | कस्मिन |
| „ | ७ | सर्वोर्थं | स वार्थं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३७ | ३ | वृत्तिमहो | वृत्तिमन्तो |
| „ | ६ | तथा च | तथा |
| „ | १६ | वदन्तो | वदतो |
| „ | १७ | संज्ञात | संप्रज्ञात |
| ४० | १३ | व्यक्त | व्यक्त |
| „ | १७ | याक्रुश्ये | व्याकुर्य्ये |
| ४१ | ७ | पुरुष | पुरुष |
| „ | १६ | वक्ष्यमाणात्व | वक्ष्यमाणत्वात्त |
| ४२ | ८ | उप | उप |
| „ | १२ | कथोति | कथीती |
| „ | २० | गर्भादयो | गर्भादय. |
| ४३ | ६ | व्यद | लघ |
| „ | २२ | कपाच्च | कपा च |
| „ | „ | निच्छेत्यादि | नित्येच्छादि |
| „ | „ | मस्ये | मत्ये |
| ४४ | १ | विषय | विषम |
| „ | ११ | कस्या. | तस्याः |
| ४५ | ६ | इति | मिति |
| „ | १६ | सत | सत् |
| ४६ | १४ | पाद्य | पाध्य |
| „ | २० | नद्या। | नद्या। |
| „ | २२ | लिङ्गदेय | लिङ्गदेह |
| „ | २६ | स्रोधेश्वरत्य | सोयेश्वरत्य |
| ४७ | ४ | मेदे | भेदे |
| „ | ६ | स्यत्यन्त | स्यात्यन्तं |
| „ | १९ | स्यापि तथा | स्यापितथा |
| „ | २१ | त्यर | त्पर |
| ४८ | २ | नेति न | नैत्यन्य |
| „ | ५ | सस्य | सत्स्य |
| „ | १६ | यहुत्य | यद्गुसि |
| ४९ | १ | तात्पर्यं | तात्पर्यं |
| „ | २० | निमिता | निमित्ता |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५६ | २५ | भेदात् | भेदः । |
| १६० | १ | आकार | स्याकार |
| ,, | ३ | माध्यस्थं | माध्यस्थ्य |
| ,, | ४ | याम् | याम् |
| ,, | ११ | भावो ऽपि | भावे ऽपि |
| ,, | १६ | श्राधू | श्राधु |
| १६१ | १४ | यास | यस |
| १६२ | १७ | तदसंभवा | यतत्त्वसंभवा |
| ,, | २० | ज्ञायत | ज्ञायत |
| ,, | २१ | स्तयाप्य | स्तयाप्य |
| ,, | २२ | सस्पृहाकपमिति | मस्पृहाकप इति |
| १६३ | १७ | चेत्यर्थः | चेत्यर्थः |
| १६४ | ११ | तायेति | तेयेति |
| ,, | १६ | अभावयाहा | ग्रब्देनोपयाहा |
| ,, | १७ | सत्त्वस्यनोपस्य | सत्त्वस्यभावास्य |
| १६५ | २० | माघ. यस्य | मातः सत्त्वस्य |
| ,, | २२ | भोगीत्यागिचेन्नु | भागी चीयन्नु |
| ,, | २४ | तत्त्वमात्रा | चीयतत्त्वमात्रा |
| १६७ | १८ | हाव्धी | हार्ष्धि |
| ,, | २३ | प्त्वयमि | प्त्वयापे |
| १६८ | ६ | सख्येय | संख्येय |
| ,, | १३ | चेतनमुप | चेतनाचेतनमुप |
| १६६ | १७ | धर्मांम | धर्मांद्य |
| ,, | २० | भेद | भेदः |
| ,, | २६ | षकाना सि छान्ताना | षिकाना षि- द्धीना |
| १७२ | २५ | सिद्धीं | सिद्धीं |
| १७३ | ८ | दावधि | दवधि |
| १७४ | ८ | क्लिष्टाह | क्लिष्टाहु |
| ,, | ३ | योगपद | योगपद्द |
| ,, | ६ | समवस्था | समवस्था |
| ,, | ७ | पायन्ता | पायन्त्या |
| १७५ | ६ | क्वचित्सहहो | क्वचित सहहो |
| १७६ | २० | तत्र | यत्र |
| १७७ | १५ | पुरापापु | पुरापापु |
| १७८ | ७ | व्यवाप्टे | व्यावप्टे |
| १७६ | २२ | यद्दु | तद्दु |
| १८० | १८ | पुहुत्त | पुहृत्त |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८१ | १८ | दरतो | दरती |
| १८३ | ५ | न्मात्रमि | न्मात्रेरि |
| १८४ | ३ | दाय | दाय |
| १८५ | १४ | पदास्था | पदस्था |
| ,, | १८ | देव | द्विव |
| ,, | २२ | सिद्धे | सिद्धेः |
| १८६ | १४ | वृद्धि | वृद्धिः |
| ,, | २२ | प्राप्तभू | प्राप्तभू |
| १८७ | ,, | यद्धे | यद्धे |
| १८८ | २१ | तेपि | तेऽपि |
| ,, | २४ | युद्ध तो | युद्धतो |
| ,, | २५ | यामो | यामो |
| १६२ | १८ | मध्याप्ये | मध्याने |
| ,, | २३ | रूप | रूप |
| १६४ | ७ | वृत्ति | वृत्त |
| १६५ | १७ | रम्यु | रम्यु |
| ,, | १६ | सत्तोती | सत्ताती |
| ,, | २४ | संप्रती | संप्रती |
| १६६ | १ | वेक | वेद |
| ,, | ६ | वेदमासीत् | वेदमायुत मासीत |
| ,, | १८ | असत्ता सं | असत्तासं |
| ,, | १६ | सत्ता | सत्ता |
| ,, | २७ | सूत्रद्वयो | सूत्रद्वयस्ययो |
| १६७ | १६ | यथं भे | यथाभे |
| १६८ | २ | भावाभाव | अभावाभाव |
| ,, | १८ | यथसं | यथासं |
| १६६ | १२ १३ | ह्रीयते | ह्रियते |
| २०० | २ | कोटस्य | कैाटस्य |
| ,, | १३ | वस्थान | वस्थाना |
| ,, | २४ | धर्मप | धर्मिप |
| २०१ | १५ | यान्तोदि | यान्तादि |
| २०२ | १५ | यापां | याया |
| २०३ | ७ | याधर्म | याऽधर्म |
| ,, | २१ | स्यावरायां | तत्स्यावरायां |
| ,, | २४ | रुपं रक्षा | रूपरक्षा |
| २०४ | ११ | सूरा | सुरा |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५९ | १६ | सिद्धान्ते | सिद्धान्ते |
| ,, | २३ | स्ता | स्ता. |
| २६२ | १८ | धोपि | धेपि |
| ,, | १६ | विवित | विविक्त |
| ,, | २५ | तद्विधा | तु द्विधा |
| २६४ | ७ | कथ्य | कथ्य |
| २६५ | १ | ननु | न तु |
| २६७ | ४ | ननुभ्र | तुभ्र |
| ,, | ७ | कथान्तु | कथा तु |
| ,, | १४ | तदादौ | तत्रादौ |
| ,, | १५ | यथा | तथा |
| ,, | २३ | विभवा | विभूवा |
| २६८ | ५ | पृस्माज् | पृस्माज् |
| २६९ | १ | दीनि | दीति |
| ,, | ५ | स्वभाव | स्वभावा |
| २७० | ११ | भमितं | भामितं |
| ,, | १६ | इत्येव | इत्येव |
| ,, | २१ | तथा | तथा च |
| २७१ | २ | मना | मत्रा |
| २७२ | ५ | चय | चेय |
| ,, | ८ | याभिष्टे | याभिष्टे |
| ,, | १८ | द्वयपद्यौ | द्वुत्पद्यौ |
| ,, | २३ | स्येये | स्थैये |
| ,, | २५ | सनकार्यं | तत्कार्यं |
| ,, | २६ | एतेभूते | एतेनभूते |
| २७३ | ३ | दर्शन | दर्शित |
| ,, | ४ | पर्यन्तैः | पर्यन्तैः |
| ,, | १६ | सदस्ति | सतोस्ति |
| २७४ | १२ | सास्थितिः | संस्थितः |
| २७५ | ७ | यद्दाचा | यद्वचा |
| ,, | १४ | कारणा | करणा |
| २७६ | १ | जातीनां | जातीयानां |
| २७७ | ११ | स्तत्र | स्तात्र |
| ,, | १७ | भान्ती | भान्ते |
| २७८ | ६ | प्रमाण | अप्रमाण |
| ,, | ११ | स्यादि | स्यमि |
| ,, | १७ | ज्ञानतज्जन्य | तज्जन्य |
| २७९ | २० | ज्ञानं | ज्ञानं न |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७९ | २३ | वित्तं | वृत्तं |
| २८० | १७ | पूतच्छे | पूच्छे |
| २८१ | ३ | कारणो | कारणत्वो |
| ,, | २२ | ज्ञातत्वा | ज्ञातत्वा |
| २८२ | १३ | तस्यापि | तस्या अपि |
| ,, | २४ | भ वादि | भावादि |
| २८४ | १ | स्वभाव | स्वाभाव |
| ,, | ६ | परेंद्र | परेद्र |
| ,, | २१ | पत्तिरि | पत्तेरि |
| २८५ | ४ | संयोगे | संयोगः |
| ,, | २० | व्यक्ति | वृत्तिः |
| २८६ | १६ | कर्मकर्त्रे | न कर्मकर्त्रे |
| २८७ | १४ | यादशून्य | यादः शून्य |
| २८८ | ६ | व्याहितोः | व्याहितः |
| ,, | २० | नत्यन्यः | मन्यन्यः |
| २९० | २४ | ह्री | ह्री |
| २९१ | ५ | भोग्या | भोग्या |
| २९२ | २ | कथायपद | कथपत्र |
| ,, | ११ | विपर्यासित | विपर्यासति |
| २९३ | ४ | सिद्धा | सिद्धौ |
| ,, | ६ | रूपस्या | रूपस्य |
| ,, | २२ | विशेषान्ते | विशेषान्ते |
| ,, | २५ | शक्तिमदा | शक्तिशक्तिमदा |
| २९४ | ११ | परिणामि | परिणामित्तुं |
| ,, | १८ | रस्मकं | रसमक |
| २९५ | १८ | चित्ततोदे | चित्तोदे |
| ,, | २४ | मतिर्धाखेति | मतिर्धा खेति |
| २९७ | ६ | पूर्व स | पूर्वसं |
| २९८ | १ | तच्चिन्त्यत | तच्चिन्त्यत |
| २९९ | ३ | दिवि | तु वि |
| ,, | ७ | ज्ञानं स | ज्ञानस |
| २९८ | २५ | स्थानीसु | स्थानीसु |
| २९९ | १८ | वृत्तिसत्ता च | वृत्तिसन्तान |
| ,, | २१ | भेगाव | भेगस |
| ३०० | २ | सत्र इति | सत इति |
| ,, | २३ | स्वर्थे | स्वर्थे |
| ,, | २४ | संमूर्ति | समूर्ति |
| ३०२ | ६ | तिष्ठेयुक्तं | तिष्ठेत्युक्तं |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०२ | १७ | परिमाणु | परिणाम |
| २०३ | १५ | निवृत्तिश्चे | निवृत्तिरि |
| ,, | २० | पुरुषार्थस्यारम्भ | अतिरित्यर्थं सूत्रम् । |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०४ | ६ | मनु | ननु |
| ,, | १० | मात्रस्थून | मत्र स्थूल |

॥ इति ॥



# योगवार्त्तिकस्थानां कतिपयप्रधानोद्देश्यविधेयानां सूचीपत्रम् ।

---

पृष्ठे ।



पृष्ठे ।